**मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसमेष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति ।।४।।**

**तस्मिन्यावत्संपातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्तन्ते**

दक्षिणायन के छः महीनों से पितृलोक को, पितृलोक से आकाश को और आकाश से चन्द्रमा को प्राप्त होते हैं। यह चन्द्रमा ही ब्राह्मणों का राजा सोम है, वह देवताओं का अन्न है। उस चन्द्रमा रूप अन्न का इन्द्रादि देवता भक्षण करते हैं।।४।।

**तृतीय प्रश्न का उत्तर**

उस चन्द्रलोक में वहाँ के उपभोग के निमित्त कर्मों का नाश होने तक रहकर फिर वे लोग उसी मार्ग से लौटते हैं, जिस मार्ग से वे पहले गये थे। उस समय वे सर्वप्रथम आकाश को प्राप्त

---

चन्द्रमसमन्नं **देवा** इन्द्रादयो **भक्षयन्ति**। अतस्ते धूमादिना गत्वा चन्द्रभूताः कर्मिणो देवैर्भक्ष्यन्ते। नन्वनर्थायेष्टादिकरणं, यद्यन्नभूता देवैर्भक्ष्येरन्। नैष दोषः। अन्नमित्युपकरणमात्रस्य विवक्षितत्वात्। न हि ते कवलोत्क्षेपेण देवैर्भक्ष्यन्ते। किं तर्ह्युपकरणमात्रं देवानां भवन्ति ते, स्त्रीपशुभृत्यादिवत्। दृष्टश्चान्नशब्द उपकरणेषु ''स्त्रियोऽन्नं पशवोऽन्नं विशोऽन्नं राज्ञामि'' त्यादि। न च तेषां स्त्र्यादीनां पुरुषोपभोग्यत्वेऽप्युपभोगो नास्ति। तस्मात्कर्मिणो देवानामुपभोग्या अपि सन्तः सुखिनो देवैः क्रीडन्ति। शरीरं च तेषां सुखोपभोगयोग्यं चन्द्रमण्डले आप्यमारभ्यते। तदुक्तं पुरस्ताच्छ्रद्धाशब्दा आपो द्युलोकाग्नौ हुताः सोमो राजा संभवतीति। ता आपः कर्मसमवायिन्य इतरैश्च भूतैरनुगता द्युलोकं प्राप्य चन्द्रत्वमापन्नाः शरीराद्यारम्भिका इष्टाद्युपासकानां भवन्ति। अन्त्यायां च शरीराहुतावग्नौ हुतायामग्निना दह्यमाने शरीरे तदुत्था आपो धूमेन सहोर्ध्वं यजमानमावेष्ट्य चन्द्रमण्डलं प्राप्य कुशमृत्तिकास्थानीया बाह्यशरीरारम्भिका भवन्ति। तदारब्धेन च शरीरेणेष्टादिफलमुपभुञ्जाना आसते।।४।।

यावत्तदुपभोगनिमित्तस्य कर्मणः क्षयः संपतन्ति येनेति संपातः कर्मणः क्षयो **यावत्संपातं** यावत्कर्मणः क्षय इत्यर्थः। ताव**त्तस्मिं**श्चन्द्रमण्डले **उषित्वाऽथा**नन्तर**मेतमेव** वक्ष्यमाण**मध्वानं** मार्गं **पुनर्निवर्तन्ते**। पुनर्निवर्तन्त इति प्रयोगात्पूर्वमप्यसकृच्चन्द्रमण्डलं गता निवृत्ताश्चाऽऽसन्निति गम्यते। तस्मादिह लोक इष्टादिकर्मोपचित्य चन्द्रं गच्छन्ति।

**यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवति ॥५॥**

होते हैं। आकाश से वायु को, वायु होकर वे धूम होते हैं और धूम होकर पुनः बादल बनते हैं॥५॥

---

तत्क्षये चाऽऽवर्तन्ते। क्षणमात्रमपि तत्र स्थातुं न लभ्यते। स्थितिनिमित्तकर्मक्षयात्। स्नेहक्षयादिव प्रदीपस्य।

तत्र किं येन कर्मणा चन्द्रमण्डलमारूढस्तस्य सर्वस्य क्षये तस्मादवरोहणं, किं वा सावशेष इति। किं ततः। यदि सर्वस्यैव क्षयः कर्मणश्चन्द्रमण्डस्थस्यैव मोक्षः प्राप्नोति। तिष्ठतु तावत्तत्रैव मोक्षः स्यान्न वेति। तत आगतस्येह शरीरोपभोगादि न संभवति। ततः शेषेणेत्यादिस्मृतिविरोधश्च स्यात्। नन्विष्टापूर्तदत्तव्यतिरेकेणापि मनुष्यलोके शरीरोपभोगनिमित्तानि कर्माण्यनेकानि संभवन्ति, न च तेषां चन्द्रमण्डले उपभोगः। अतोऽक्षीणानि तानि। यन्निमित्तं चन्द्रमण्डलमारूढस्तान्येव क्षीणानीत्यविरोधः। शेषशब्दश्च सर्वेषां कर्मत्वसामान्यादविरुद्धः। अत एव च तत्रैव मोक्षः स्यादिति दोषाभावः। विरुद्धानेकयोन्युपभोगफलानां च कर्मणामेकैकस्य जन्तोरारम्भकत्वसंभवात्। न चैकस्मिञ्जन्मनि सर्वकर्मणां क्षय उपपद्यते। ब्रह्महत्यादेश्चैकैकस्य कर्मणोऽनेकजन्मारम्भकत्वस्मरणात्। स्थावरादिप्राप्तानां चात्यन्तमूढानामुत्कर्षहेतोः कर्मण आरम्भकत्वासंभवात्। गर्भभूतानां च स्रंसमानानां कर्मासंभवे संसारानुपपत्तिः। तस्मान्नैकस्मिञ्जन्मनि सर्वेषां कर्मणामुपभोगः।

यत्तु कैश्चिदुच्यते सर्वकर्माश्रयोपमर्देन प्रायेण कर्मणां जन्मारम्भकत्वम्। तत्र कानिचित्कर्माण्यनारम्भकत्वेनैव तिष्ठन्ति कानिचिज्जन्माऽऽरभन्ते इति नोपपद्यते। मरणस्य सर्वकर्माभिव्यञ्जकत्वात्स्वगोचराभिव्यञ्जकप्रदीपवदिति। तदसत्। सर्वस्य सर्वात्मकत्वाभ्युपगमात्। न हि सर्वस्य सर्वात्मकत्वे देशकालनिमित्तावरुद्धत्वात्सर्वात्मनोपमर्दः कस्यचित्क्वचिदभिव्यक्तिर्वा सर्वात्मनोपपद्यते। तथा कर्मणामपि साश्रयाणां भवेत्। यथा च पूर्वानुभूतमनुष्यमयूरमर्कटादिजन्माभिसंस्कृता विरुद्धानेकवासना मर्कटत्वप्रापकेन(ण) कर्मणा मर्कटजन्माऽऽरभमाणेन नोपमृद्यन्ते, तथा कर्माण्यप्यन्यजन्मप्राप्तिनिमित्तानि नोपमृद्यन्ते इति युक्तम्। यदि हि सर्वाः पूर्वजन्मानुभववासना

**अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्तेऽतो वै खलु दुर्निष्प्रपतरं**

अभ्र होकर वह (वर्षा करने में समर्थ) मेघ होता है, मेघ होकर ऊँचे स्थानों में बरसता है। उसके बाद वे जीव इस लोक में धान, जौ, औषधि, वनस्पति, तिल और उड़द इत्यादि होकर उत्पन्न होते हैं। तत्पश्चात् यहाँ से निष्क्रमण निश्चय ही उसके लिये अत्यन्त कष्ट प्रद होता है। जो-जो जीव उस अन्न को खाता है और जो वीर्य सेचन करता है वह तद्रूप ही हो जाता है। (यदि ऊर्ध्वरेता, बालक, नपुंसक या वृद्ध पुरुष ने उस अन्न को खाया हो, तो वह उनके उदर

---

उपमृद्येरन्मर्कटजन्मनिमित्तेन कर्मणा मर्कटजन्मन्यारब्धे मर्कटस्य जातमात्रस्य मातुः शाखायाः शाखान्तरगमने मातुरुदरसंलग्नत्वादिकौशलं न प्राप्नोति। इह जन्मन्यनभ्यस्तत्वात्। न चातीतानन्तरजन्मनि मर्कटत्वमेवाऽऽसीत्तस्येति शक्यं वक्तुम्। "तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च" (बृ.४.४.२) इति श्रुतेः। तस्माद्वासनावन्नाशेषकर्मोपमर्द इति शेषकर्मसंभवः। यत एवं तस्माच्छेषेणोपभुक्तात्कर्मणः संसारः उपपद्यत इति न कश्चिद्विरोधः।

कोऽसावध्वा यं प्रति निवर्तन्ते इत्युच्यते। यथेतं यथागतं निवर्तन्ते। ननु **मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसमि**ति गमनक्रमः उक्तो न तथा निवृत्तिः। किं तर्ह्याकाशाद्वायुमित्यादि, कथं यथेतमित्युच्यते। नैष दोषः। आकाशप्राप्तेस्तुल्यत्वात्पृथिवीप्राप्तेश्च। न चात्र यथेतमेवेति नियमोऽनेवंविधमपि निवर्तन्ते पुनर्निवर्तन्ते इति तु नियमः। अत उपलक्षणार्थमेतद्यथेतमिति। अतो भौतिक**माकाशं** तावत्प्रतिपद्यन्ते। यास्तेषां चन्द्रमण्डले शरीरारम्भिका आपः आसंस्तास्तेषां तत्रोपभोगनिमित्तानां कर्मणां क्षये विलीयन्ते। घृतसंस्थानमिवाग्निसंयोगे ता विलीना अन्तरिक्षस्था आकाशभूता इव सूक्ष्मा भवन्ति। ता अन्तरिक्षाद्वायुर्भवन्ति। वायुप्रतिष्ठा वायुभूता इतश्चामुतश्चोह्यमानास्ताभिः सह क्षीणकर्मा वायुभूतो भवति। **वायुर्भूत्वा** ताभिः सहैव **धूमो भवति। धूमो भूत्वाऽभ्रम**भ्भरणमात्ररूपो **भवति**।।५।।

**अभ्रं भूत्वा** ततः सेचनसमर्थो **मेघो भवति मेघो भूत्वो**न्नतेषु प्रदेशेष्वथ **प्रवर्षति**। वर्षधारारूपेण शेषकर्मा पततीत्यर्थः। **ते इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इत्ये**वंप्रकारा **जायन्ते**। क्षीणकर्मणामनेकत्वाद्बहुवचननिर्देशः। मेघादिषु

## यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवति ॥६॥

में ही नष्ट हो जाता है। कदाचित् वीर्य सेचन करने वालों के द्वारा खाये जाने पर वह अपने कर्मों की वृत्ति का लाभ कर पाता है। अतएव अन्नरूप में आ जाने के बाद वहाँ से उसका निकलना कठिन माना गया है)॥६॥

---

पूर्वेष्वेकरूपत्वादेकवचननिर्देशः। यस्माद्गिरितटदुर्गनदीसमुद्रारण्यमरुदेशादिसंनिवेशसहस्राणि वर्षधाराभिः पतितानाम्। **अतस्तस्माद्धेतोर्वै खलु दुर्निष्प्रपतरं** दुर्निष्क्रमणं दुर्निःसरणम्। यतो गिरितटादुदकस्रोतसोह्यमाना नदीः प्राप्नुवन्ति ततः समुद्रं ततो मकरादिभिर्भक्ष्यन्ते। तेऽप्यन्येन। तत्रैव च सह मकरेण समुद्रे विलीनाः समुद्राम्भोभिर्जलधरैराकृष्टाः पुनर्वर्षधाराभिर्मरुदेशे शिलातटे वाऽगम्ये पतितास्तिष्ठन्ति कदाचिद्व्यालमृगादिपीता भक्षिताश्चान्यैः। तेऽप्यन्यैरित्येवंप्रकाराः परिवर्तेरन्। कदाचिदभक्ष्येषु स्थावरेषु जातास्तत्रैव शुष्येरन्। भक्ष्येष्वपि स्थावरेषु जातानां रेतःसिग्देहसंबन्धो दुर्लभो बहुत्वात्स्थावराणामित्यतो दुर्निष्क्रमणत्वम्।

अथवाऽतोऽस्माद्व्रीहियवादिभावाद्दुर्निष्प्रपतरं दुर्निर्गमतरम्। दुर्निष्प्रपतरमिति तकार एको लुप्तो द्रष्टव्यः। व्रीहियवादिभावो दुर्निष्प्रपतस्तस्मादपि दुर्निष्प्रपताद्रेतःसिग्देहसंबन्धो दुर्निष्प्रपततरं इत्यर्थः। यस्मादूर्ध्वरेतोभिर्बालैः पुंस्त्वरहितैः स्थविरैर्वा भक्षिता अन्तराले शीर्यन्ते। अनेकत्वादन्नादानाम्। कदाचित्काकतालीयवृत्त्या रेतःसिग्भिर्भक्ष्यन्ते यदा तदा रेतःसिग्भावं गतानां कर्मणो वृत्तिलाभः। कथम् **यो यो ह्यन्नमत्त्यु**नुशयिभिः संश्लिष्टं रेतःसिग्यश्च **रेतः सिञ्चत्यृ**तुकाले योषिति तद्भूय **एव** तदाकृतिरेव **भवति**। तदवयवाकृतिभूयस्त्वं भूय इत्युच्यते रेतोरूपेण योषितो गर्भाशयेऽन्तः प्रविष्टोऽनुशयी। रेतसो रेतःसिगाकृतिभावितत्वात्। "सर्वेभ्योऽङ्गेभ्यस्तेजः संभूतम्" (ऐ.४.१)इति श्रुत्यन्तरात्। अतो रेतःसिगाकृतिरेव भवतीत्यर्थः। तथा हि— पुरुषात्पुरुषो जायते गोर्गवाकृतिरेव न जात्यत्यन्तराकृतिस्तस्माद्युक्तं तद्भूय एव भवतीति।

ये त्वन्येऽनुशयिभ्यश्चन्द्रमण्डलमनारुह्येहैव पापकर्मभिर्घोरैर्व्रीहियवादिभावं प्रतिपद्यन्ते पुनर्मनुष्यादिभावं, तेषां नानुशयिनामिव दुर्निष्प्रपतरम्। कस्मात्? कर्मणा हि तैर्व्रीहियवादिदेह उपात्त इति तदुपभोगनिमित्तक्षये व्रीह्यादिस्तम्बदेहविनाशे यथाकर्मार्जितं देहान्तरं नवं नवं जलूकावत्संक्रमन्ते सविज्ञाना एव "सविज्ञानो भवति सविज्ञानमेवान्ववक्रामति"

(बृ.४.४.२) इति श्रुत्यन्तरात्।

यद्यप्युपसंहृतकरणाः सन्तो देहान्तरं गच्छन्ति, तथाऽपि स्वप्नवद्देहान्तर-प्राप्तिनिमित्तकर्मोद्भावितवासनाज्ञानेन सविज्ञाना एव देहान्तरं गच्छन्ति, श्रुतिप्रामाण्यात्। तथाऽर्चिरादिना धूमादिना च गमनं स्वप्न इवोद्भूतविज्ञानेन लब्धवृत्तिकर्मनिमित्तत्वाद्गमनस्य। न तथाऽनुशयिनां व्रीह्यादिभावेन जातानां सविज्ञानानामेव रेतःसिग्योषिद्देहसंबन्ध उपपद्यते। न हि ब्रीह्यादिलवनकण्डनपेषणादौ च सविज्ञानानां स्थितिरस्ति।

ननु चन्द्रमण्डलादप्यवरोहतां देहान्तरगमनस्य तुल्यत्वाज्जलूकावत्सविज्ञानतैव युक्ता। तथा सति घोरो नरकानुभव इष्टापूर्तादिकारिणां चन्द्रमण्डलादारभ्य प्राप्तो यावद्ब्राह्मणादिजन्म। तथा च सत्यनर्थायैवेष्टापूर्ताद्युपासनं विहितं स्यात्। श्रुतेश्चाप्रामाण्यं प्राप्तं, वैदिकानां कर्मणामनर्थानुबन्धित्वात्। न। वृक्षारोहणपतनवद्विशेषसंभवात्। देहाद्देहान्तरं प्रतिपित्सोः कर्मणो लब्धवृत्तित्वात्कर्मणोद्भावितेन विज्ञानेन सविज्ञानत्वं युक्तम्। वृक्षाग्रमारोहत इव फलं जिघृक्षोः। तथाऽर्चिरादिना गच्छतां सविज्ञानत्वं भवेत्। धूमादिना च चन्द्रमण्डलमारुरुक्षताम्। न तथा चन्द्रमण्डलादवरुरुक्षतां वृक्षाग्रादिव पततां सचेतनत्वम्। यथा च मुद्गराद्यभिहतानां तदभिघातवेदननिमित्तसंमूर्छितप्रतिबद्धकरणानां स्वदेहेनैव देशाद्देशान्तरं नीयमानानां विज्ञानशून्यता दृष्टा, तथा चन्द्रमण्डलान्मानुषादिदेहान्तरं प्रत्यवरुरुक्षतां स्वर्गभोगनिमित्तकर्मक्षयान्मृदिताब्देहानां प्रतिबद्धकरणानाम्। अतस्तेऽपरित्यक्त-देहबीजभूताभिरद्भिर्मूर्छिता इवाऽऽकाशादिक्रमेणेमामवरुह्य कर्मनिमित्तजातिस्थावरदेहैः संश्लिष्यन्ते प्रतिबद्धकरणतयाऽनुद्भूतविज्ञाना एव।

तथा लवनकण्डनपेषणसंस्कारभक्षणरसादिपरिणामरेतःसेककालेषु मूर्छितवदेव। देहान्तरारम्भकस्य कर्मणोऽलब्धवृत्तित्वात्। देहबीजभूताप्संबन्धापरित्यागेनैव सर्वास्ववस्थासु वर्तन्त इति जलूकावच्चेतनावत्त्वं न विरुध्यते। अन्तराले त्वविज्ञानं मूर्छितवदेवेत्यदोषः।

न च वैदिकानां कर्मणां हिंसायुक्तत्वेनोभयहेतुत्वं शक्यमनुमातुम्। हिंसायाः शास्त्रचोदितत्वात्। "अहिंसन्सर्वभूतान्यन्यत्र तीर्थेभ्यः" इति श्रुतेः शास्त्रचोदिताया हिंसाया नाधर्महेतुत्वमभ्युपगम्यते। अभ्युपगमेऽप्यधर्महेतुत्वे मन्त्रैर्विषादिवत्तदपनयोपपत्तेर्न दुःखकार्यारम्भकत्वोपपत्तिर्वैदिकानां कर्मणां मन्त्रेणेव विषभक्षणस्येति।। ६।।

**तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन्ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वाऽथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरञ्श्वयोनिं वा सूकरयोनिं वा चाण्डालयोनिं वा ।।७।।**

**अथैतयोः पथोर्न कतरेणचन तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत्तृतीयꣳ स्थानं तेनासौ लोको**

### संस्कार युक्त जीवों की कर्मानुसार गति

उन संस्कार युक्त जीवों में से जो अच्छे आचरण वाले होते हैं, वे शीघ्र ही उत्तम योनि को प्राप्त होते हैं, अर्थात् वे ब्राह्मणयोनि, क्षत्रिययोनि वा वैश्ययोनि को प्राप्त करते हैं और जो अशुभ आचरण वाले होते हैं, वे कुत्ते की योनि, सूकरयोनि या चाण्डाल योनिरूप अशुभ शरीर को प्राप्त करते हैं।।७।।

### चतुर्थ प्रश्न का उत्तर

किन्तु जो पापात्मा धूम या अर्चिरादि मार्गों में से किसी भी मार्ग से नहीं जाते, वे ये बेचारे जीव क्षुद्र और पुनःपुनः आने जाने वाले प्राणी होते हैं। जन्मो और मरो; यही तृतीय स्थान उनके लिये

---

**तत्त**त्र तेष्वनुशयिनां मध्ये ये इह लोके रमणीयं शोभनं चरणं शीलं येषां ते **रमणीयचरणा** रमणीयचरणेनोपलक्षितः शोभनोऽनुशयः पुण्यं कर्म येषां ते रमणीयचरणाः उच्यन्ते। क्रौर्यानृतमायावर्जितानां हि शक्य उपलक्षयितुं शुभानुशयसद्भावः। तेनानुशयेन पुण्येन कर्मणा चन्द्रमण्डले भुक्तशेषेणा**भ्याशो ह** क्षिप्रमेव **यद्**इति क्रियाविशेषणं **ते रमणीयां** क्रौर्यादिवर्जितां **योनिमापद्येरन्**प्राप्नुयु**र्ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा** स्वकर्मानुरूपेण। **अथ** पुनर्ये तद्विपरीताः **कपूयचरणो**पलक्षित-कर्माणोऽशुभानुशया **अभ्याशो ह यत्ते कपूयां** यथाकर्म **योनिमापद्येरन्क**पूयामेव धर्मसंबन्धवर्जितां जुगुप्सितां योनिमापद्येर**ञ्श्वयोनिं वा सूकरयोनिं वा चाण्डालयोनिं** स्वकर्मानुरूपेणैव। ये तु रमणीयचरणा द्विजातयस्ते स्वकर्मस्थाश्चेदिष्टादिकारिणस्ते धूमादिना गच्छन्त्यागच्छन्ति च पुनः पुनर्घटीयन्त्रवत्। विद्यां चेत्प्राप्नुयुस्तदाऽर्चिरादिना गच्छन्ति।।७।।

यदा तु न विद्यासेविनो नापीष्टादिकर्म सेवन्ते, तदाऽ**थैतयोः पथो**र्यथोक्तयोरर्चिर्धूमादिलक्षणयो**र्न कतरेणा**न्यतरेण च नापि यन्ति **तानीमानि** भूतानि

संसार गति घृणा

**न संपूर्यते तस्माज्जुगुप्सेत तदेष श्लोकः ॥८॥**

ब्राह्मण : सन्

ब्राह्मण **स्तेनो हिरण्यस्य, सुरां पिबꣳश्च गुरोस्तल्पमावसन्ब्रह्महा**

पतित **चैते पतन्ति चत्वारः, पञ्चमश्चाऽऽचरꣳस्तैरिति ॥९॥** ब्राह्मणस्य हन्ता

होता है। बस! यही कारण है जिससे कि स्वर्गादि परलोक भरता नहीं। अतः (जन्मना-मरनारूप संसार गति से विवेकशील व्यक्ति को) घृणा करनी चाहिये। इस विषय में यह मन्त्र है॥८॥

ब्राह्मण का सोना चुराने वाला, ब्राह्मण होकर मदिरा पीने वाला, गुरुपत्नी से सहवास करने वाला और ब्राह्मण की हत्या करने वाला, ये चारों पतित होते हैं तथा पाँचवाँ उनके साथ संसर्ग करने वाला भी (पतित होता है)॥९॥ cause for the increase of population

---

**क्षुद्राणि** दंशमशककीटादीन्य**सकृदावर्तीनि भवन्ति**। अत उभयमार्गपरिभ्रष्टा ह्यसकृज्जायन्ते म्रियन्ते चेत्यर्थः। तेषां जननमरणसंततेरनुकरणमिदमुच्यते **जायस्व म्रियस्वेती**श्वरनिमित्ता वा चेष्टोच्यते। जननमरणलक्षणेनैव कालयापना भवति। न तु क्रियासु भोगेषु वा कालोऽस्तीत्यर्थः। **एतत्क्षु**द्रजन्तुलक्षणं **तृतीयं** पूर्वोक्तौ पन्थानावपेक्ष्य **स्थानं** संसरताम्। येनैवं दक्षिणमार्गगा अपि पुनरागच्छन्त्यनधिकृतानां ज्ञानकर्मणोरगमनमेव दक्षिणेन पथेति। **तेनासौ लोको न संपूर्यते**। पञ्चमस्तु प्रश्नः पञ्चाग्निविद्यया व्याख्यातः। प्रथमो दक्षिणोत्तरमार्गाभ्यामपाकृतो दक्षिणोत्तरयोः पथोर्व्यावर्तनाऽपि मृतानामग्नौ प्रक्षेपः समानस्ततो व्यावर्तनाऽन्येऽर्चिरादिना यन्त्यन्ये धूमादिना पुनरुत्तरदक्षिणायने षण्मासान्प्राप्नुवन्तः संयुज्य पुनर्व्यावर्तन्ते। अन्ये संवत्सरमन्ये मासेभ्यः पितृलोकमिति व्याख्याता। पुनरावृत्तिरपि क्षीणानुशयानां चन्द्रमण्डलादाकाशादिक्रमेणोक्ता। अमुष्य लोकस्यापूरणं स्वशब्देनैवोक्तम्— "तेनासौ लोको न संपूर्यत" इति। यस्मादेवं कष्टा संसारगतिस्**तस्माज्जुगुप्सेत**। यस्माच्च जन्ममरणजनितवेदनानुभवकृतक्षणाः क्षुद्रजन्तवो ध्वान्ते च घोरे दुस्तरे प्रवेशिताः सागरे इवागाधेऽप्लवे निराशाश्चोत्तरणं प्रति। तस्माच्चैवंविधां संसारगतिं जुगुप्सेत, बीभत्सेत, घृणीभवेन्मा भूदेवंविधे संसारमहोदधौ घोरे पातः इति। **तदे**तस्मिन्नर्थ **एष श्लोकः** पञ्चाग्निविद्यास्तुतये॥८॥

**स्तेनो हिरण्यस्य** ब्राह्मणसुवर्णस्य हर्ता। **सुरां पिबन्**ब्राह्मणः सन्। **गुरोश्च तल्पं** दारा**न्**आ**वसन्**। **ब्रह्म**हा ब्राह्मणस्य हन्ता चेत्येते **पतन्ति चत्वारः**। **पञ्चमश्च तैः** सहाऽऽ**चरन्**िति॥९॥

**अथ ह य एतानेवं पञ्चाग्नीन्वेद न सह तैरप्याचरन्पाप्मना लिप्यते शुद्धः पूतः पुण्यलोको भवति य एवं वेद य एवं वेद ।।१०।।**

**इति पञ्चमाध्ययस्य दशमः खण्डः ।।१०।।**

Refer below 1

## (अथ पञ्चमाध्यायस्यैकादशः खण्डः)

**प्राचीनशाल औपमन्यवः सत्ययज्ञः पौलुषिरिन्द्रद्युम्नो भाल्लवेयो जनः शार्कराक्ष्यो बुडिल आश्वतराश्विस्ते हैते**

जो कोई इस प्रकार पञ्चाग्नियों को जानता है, वह उन पतितों के साथ संसर्ग करता हुआ भी पाप से लिपायमान नहीं होता है। इसीलिये वह शुद्ध पवित्र और पुण्यलोक का भागी बन जाता है जो इस प्रकार जानता है।। १०।।

**।। इति दशमः खण्डः ।।**

### आत्ममीमांसा का प्रस्ताव

उपमन्यु का पुत्र प्राचीनशाल, पुलुष का पुत्र सत्ययज्ञ, भल्लवि का पौत्र इन्द्रद्युम्न, शार्कराक्ष्य का पुत्र जन, एवं अश्वतराश्व का पुत्र बुडिल ये पाँचों बड़े कुटुम्ब वाले महागृहस्थ

---

**अथ ह** पुनर्यो यथोक्तान्**पञ्चाग्नीन्वेद** स **तैरप्याचरन्**महापातकिभिः **सह न पाप्मना लिप्यते शुद्धः** एव। तेन पञ्चाग्निदर्शनेन पावितो यस्मात्**पूतः** पुण्यो लोकः प्राजापत्यादिर्यस्य सोऽयं **पुण्यलोको भवति य एवं वेद** यथोक्तं समस्तं पञ्चभिः प्रश्नैः पृष्टमर्थजातं वेद। द्विरुक्तिः समस्तप्रश्ननिर्णयप्रदर्शनार्था।। १०।।

**इति पञ्चमाध्यायस्य दशमः खण्डः।।१०।।**

दक्षिणेन पथा गच्छतामन्नभावः उक्तः "तद्देवानामन्नं तं देवा भक्षयन्ती"ति, क्षुद्रजन्तुलक्षणा च कष्टा संसारगतिरुक्ता। तदुभयदोषपरिजिहीर्षया वैश्वानरात्तृभावप्रतिपत्त्यर्थमुत्तरो ग्रन्थ आरभ्यते। अत्स्यन्नं पश्यसि प्रियमित्यादिलिङ्गात्। आख्यायिका तु सुखावबोधार्था विद्यासंप्रदानन्यायप्रदर्शनार्था च—

**प्राचीनशाल इति नामत** उपमन्योरपत्य**मौपमन्यवः**। **सत्ययज्ञो** नामतः पुलुषस्यापत्यं **पौलुषिः**। तथेन्द्रद्युम्नो नामतो भल्लवेरपत्यं भाल्लविस्तस्यापत्यं

**महाशाला महाश्रोत्रियाः समेत्य मीमाꣳसां चक्रुः को न आत्मा किं ब्रह्मेति ।।१।।**

**ते ह संपादयांचक्रुरुद्दालको वै भगवन्तोऽयमारुणिः संप्रतीममात्मानं वैश्वानरमध्येति तꣳ हन्ताभ्यागच्छामेति तꣳ हाभ्याजग्मुः ।।२।।**

तथा महाश्रोत्रिय एकत्रित होकर आपस में विचार करने लगे, कि हमारा आत्मा कौन है और ब्रह्म क्या है?।।१।।

**औपमन्यवादि का उद्दालक के पास जाना**

उन सभी पूज्यों ने (उक्त तत्त्व का निश्चय न होने से) निष्कर्ष निकाला कि यह अरुण का पुत्र आरुणि उद्दालक इस समय वैश्वानर आत्मा को जानता है। अतः हम सब उनके पास चलें, इस प्रकार निश्चय कर वे उस आरुणि के पास आये।।२।।

---

**भाल्लवेयः**। **जन** इति नामतः शर्कराक्षस्यापत्यं **शार्कराक्ष्यः**। बुडिलो नामतोऽश्वतराश्वस्यापत्य**माश्वतराश्विः**। पञ्चापि **ते हैते महाशाला महागृहस्था** विस्तीर्णाभिः शालाभिर्युक्ताः, संपन्ना इत्यर्थः। **महाश्रोत्रियाः** श्रुताध्ययनवृत्तसंपन्ना इत्यर्थः। ते एवंभूताः सन्तः **समेत्य** संभूय क्वचिन्**मीमांसां** विचारणां **चक्रुः** कृतवन्त इत्यर्थः। कथम्? **को नो**ऽस्माक**मात्मा**, **किं ब्रह्मेत्या**त्मब्रह्मशब्दयोरितरेतरविशेषणविशेष्यत्वम् ब्रह्मेत्यध्यात्मपरिच्छिन्नमात्मानं निवर्तयत्यात्मेति चाऽऽत्मव्यतिरिक्तस्याऽऽदित्यादिब्रह्मण उपास्यत्वं निवर्तयति। अभेदेनाऽऽत्मैव ब्रह्म, ब्रह्मैवाऽऽत्मेत्येवं सर्वात्मा वैश्वानरो ब्रह्म, स आत्मेत्येतत्सिद्धं भवति। मूर्धा ते व्यपतिष्यदन्धोऽभविष्यदित्यादिलिङ्गात्।। १।।

**ते ह** मीमांसन्तोऽपि निश्चयमलभमानाः **संपादयांचक्रुः** संपादितवन्त आत्मन उपदेष्टारम्। **उद्दालको वै** प्रसिद्धो नामतो **भगवन्तः** पूजावन्तोऽयमारुणिररुणस्यापत्यं संप्रति सम्यगिममात्मानं वैश्वानरमस्मदभिप्रेत**मध्येति** स्मरति। **तं हन्ते**दानी**मभ्यागच्छामेत्ये**वं निश्चित्य, **तं हाभ्याजग्मुर्ग**तवन्तस्तमारुणिम्।। २।।

**स ह संपादयांचकार, प्रक्ष्यन्ति मामिमे महाशाला महाश्रोत्रियास्तेभ्यो न सर्वमिव प्रतिपत्स्ये, हन्ताहमन्यमभ्यनुशासानीति ।।३।।**

**तान्होवाचाश्वपतिर्वै भगवन्तोऽयं कैकेय:, संप्रतीममात्मानं वैश्वानरमध्येति, तꣳ हन्ताभ्यागच्छामेति तꣳ हाभ्याजग्मु: ।।४।।**

**तेभ्यो ह प्राप्तेभ्य: पृथगर्हाणि कारयांचकार, स ह प्रात: संजिहान उवाच, न मे स्तेनो जनपदे न कदर्यो न मद्यपो नानाहिता-**

### आये हुए ऋषियों के सहित उद्दालक अश्वपति के पास गया

उद्दालक ने निश्चय किया कि ये महागृहस्थ और परम श्रोत्रिय मुझसे (वैश्वानर के विषय में) पूछेंगे। पर मैं इन्हें अच्छी प्रकार से बतला न सकूँगा। अत: अच्छा होगा कि मैं इन्हें दूसरा उपदेशक बतला दूँ।।३।।

उद्दालक ने ऋषियों से कहा- हे भगवन्! इस समय कैकेय का पुत्र अश्वपति इस वैश्वानर आत्मा को ठीक-ठीक जानता है, आइये हम सब उसी के पास चलें। ऐसा कहकर वे सभी उस अश्वपति के पास आये ।।४।।



### अश्वपति द्वारा अभ्यागतों का स्वागत

अपने पास आये हुए उन ऋषियों का राजा ने (पुरोहित और सेवकों से) पृथक-पृथक सत्कार कराया। दूसरे दिन प्रात: काल उठते ही (उनके पास जाकर विनयपूर्वक) उसने कहा।

---

**स ह** तान्दृष्ट्वैव तेषामागमनप्रयोजनं बुद्ध्वा **संपादयांचकार**। कथम्? प्रक्ष्यन्ति मां वैश्वानर**मिमे महाशाला महाश्रोत्रियास्तेभ्यो**ऽहं **न सर्वमिव** पृष्टं **प्रतिपत्स्ये** वक्तुं नोत्सहे। अतो **हन्ताहमि**दानी**मन्य**मेषा**मभ्यनुशासानि** वक्ष्याम्युपदेष्टार**मिति**।।३।।

एवं संपाद्य **तान्होवाच**। **अश्वपतिर्वै** नामतो **भगवन्तोऽयं** केकयस्यापत्यं **कैकेय: संप्रति** सम्यग**िममात्मानं वैश्वानरमध्येती**त्यादि समानम्।।४।।

**तेभ्यो ह** राजा **प्राप्तेभ्य:** पृथक**पृथगर्हाण्य**र्हणानि पुरोहितैर्भृत्यैश्च **कारयांचकार** कारितवान्। **स ह**ान्येद्यू राजा **प्रात: संजिहान उवाच** विनयेनोपगम्यैतद्धनं

**ग्निर्नाविद्वान्न स्वैरी स्वैरिणी कुतो, यक्ष्यमाणो वै भगवन्तोऽहमस्मि, यावदेकैकस्मा ऋत्विजे धनं दास्यामि, तावद्भगवद्भ्यो दास्यामि, वसन्तु भगवन्त इति ।।५।।**

**ते होचुर्येन हैवार्थेन पुरुषश्चरेत्तथ्ं, हैव वदेदात्मानमेवेमं वैश्वानरथ्ं संप्रत्यध्येषि, तमेव नो ब्रूहीति ।।६।।**

मेरे राज्य में कोई चोर नहीं, धनवान् कोई कृपण नहीं, न मद्यपान करने वाला, न अनाहिताग्नि, न अविद्वान् और न परस्त्री लम्पट ही है, फिर कोई दुराचारिणी स्त्री कैसे हो सकती है। हे पूज्यगण! मैं भी यज्ञ करने वाला हूँ (उसके लिये मैंने धन का संकल्प कर लिया है, तदनुसार) मैं एक ऋत्विक् को जितना धन दूँगा, उतना ही धन आपमें से प्रत्येक को भी दूँगा। अतः आप लोग यहीं ठहरिये (और मेरा यज्ञ देखिये)।।५।।

उन ऋषियों ने कहा, जिस प्रयोजन से कोई पुरुष किसी के पास जावे, तो उसे अपना प्रयोजन बतला देना चाहिये। इस समय आप इस वैश्वानर आत्मा को भली प्रकार जानते हैं। अतः उसी का वर्णन आप हमसे करें।।६।।

---

मत्त उपाददध्वमिति, तैः प्रत्याख्यातो, मयि दोषं पश्यन्ति नूनं, यतो न प्रतिगृह्णन्ति मत्तो धनमिति मन्वान आत्मनः सद्वृत्ततां प्रतिपिपादयिषन्नाह। **न मे** मम **जनपदे स्तेनः** परस्वहर्ता विद्यते। न **कदर्यो**ऽदाता सति विभवे। **न मद्यपो** द्विजोत्तमः सन्। **नानाहिताग्निः** शतगुः **नाविद्वान**धिकारानुरूपम्। **न स्वैरी** परदारेषु गन्ता। अत एव **स्वैरिणी कुतो** दुष्टचारिणी न संभवतीत्यर्थः। तैश्च न वयं धनेनार्थिन इत्युक्ते आहाल्पं मत्वैते धनं न गृह्णन्तीति। **यक्ष्माणो वै** कतिभिरहोभिर**हं** हे **भगवन्तोऽस्मि**। तदर्थं क्लृप्तं धनं मया **यावदेकैकस्मै** यथोक्त**मृत्विजे धनं दास्यामि तावत्**प्रत्येकं **भगवद्भ्यो**ऽपि **दास्यामि**। **वसन्तु भगवन्तः**, पश्यन्तु च मम यागमित्युक्ता**स्ते होचुः**। **येन हैवार्थेन** प्रयोजनेन यं प्रति **चरेद्**गच्छेत्**पुरुषस्तं हैवार्थं वदेत्**। इद**मेव** प्रयोजनमागमनस्येत्ययंन्यायः सताम्। वयं च वैश्वानरज्ञानार्थिनः। आत्मानमेवेमं **वैश्वानरं संप्रत्यध्येषि** सम्यग्जानासि। अत**स्तमेव नो**ऽस्मभ्यं **ब्रूही**त्युक्तस्तान्होवाच। **प्रातर्वो** युष्मभ्यं **प्रतिवक्तास्मि** प्रतिवाक्यं दातास्मीत्युक्तास्ते

**तान्होवाच प्रातर्वः प्रतिवक्तास्मीति ते ह समित्पाणयः पूर्वाह्णे प्रतिचक्रमिरे तान्हानुपनीयैवैतदुवाच ।।७।।**

**इति पञ्चमाध्यायस्यैकादशः खण्डः ।।११।।**

 **(अथ पञ्चमाध्यायस्य द्वादशः खण्डः ।।**

**औपमन्यव कं त्वमात्मानमुपास्से इति दिवमेव भगवो राजन्निति होवाचैष वै सुतेजा आत्मा वैश्वानरो यं**

 **अश्वपतिके प्रति मुनियों की विधिपूर्वक उपसत्ति**

अश्वपति ने उन मुनियों से कहा कि मैं आप लोगों को इसका उत्तर प्रातःकाल दूँगा। राजा के अभिप्राय को जानकर दूसरे दिन पूर्वाह्न में वे मुनिगण हाथों में समिधायें लेकर राजा के पास गए। राजा ने उनका उपनयन न करके ही उस वैश्वानर विद्या का उपदेश कर दिया।।७।।

।। इत्यैकादशः खण्डः ।।

 **अश्वपति तथा औपमन्यव का संवाद**

(राजा ने कहा) हे औपमन्यव! तुम किस वैश्वानर आत्मा की उपासना करते हो? हे पूज्य राजन्! मैं द्युलोक को ही वैश्वानर मानकर उपासना करता हूँ, ऐसा औपमन्यव ने उत्तर दिया। (राजा ने कहा-) तुम जिस आत्मा की उपासना करते हो निश्चय ही यह सुतेजा नाम से प्रसिद्ध

---

**ह** राज्ञोऽभिप्रायज्ञाः **समित्पाणयः** समिद्भारहस्ताः अपरेद्युः **पूर्वाह्णे** राजानं **प्रतिचक्रमिरे** गतवन्तः। यत एवं महाशाला महाश्रोत्रिया ब्राह्मणाः सन्तो महाशालत्वाद्यभिमानं हित्वा समिद्भारहस्ता जातितो हीनं राजानं विद्यार्थिनो विनयेनोपजग्मुः। तथाऽन्यैर्विद्योपादित्सुभिर्भवितव्यम्। तेभ्यश्चादाद्विद्यामनुपनीयैवोपनयनमकृत्वैव तान्। यथा योग्येभ्यो विद्यामदात्तथाऽन्येनापि विद्या दातव्येत्याख्यायिकार्थः। एतद्वैश्वानरविज्ञानमुवाचेति वक्ष्यमाणेन सम्बन्धः।।५।।६।।७।।

इति पञ्चमाध्यायस्यैकादशः खण्डः।।११।।

स कथमुवाचेत्याह— हे **औपमन्यव**! **कमात्मानं** वैश्वानरं **त्वमुपास्से इति** पप्रच्छ। नन्वयमन्याय आचार्यः सच्छिष्यं पृच्छतीति? नैष दोषः। ''यद्वेत्थ तेन मोपसीद ततस्त ऊर्ध्वं वक्ष्यामी'' तिन्यायदर्शनात्। अन्यत्राप्याचार्यस्याप्रतिभानवति शिष्ये प्रतिभोत्पादनार्थः प्रश्नो दृष्टोऽजातशत्रोः, ''क्वैष तदाऽभूत्कुत एतदागादि''

**त्वमात्मानमुपास्से तस्मात्तव सुतं प्रसुतमासुतं कुले दृश्यते ।।१।।**

**अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते मूर्धा त्वेष आत्मन इति होवाच मूर्धा ते व्यपतिष्यद्यन्मां नाऽऽगमिष्यः इति ।।२।।**

**इति पञ्चमाध्यायस्य द्वादशः खण्डः ।। १२।।**

वैश्वानर आत्मा है, (क्योंकि आत्मा का यह अवयव है) इसीलिये तुम्हारे कुल में ''सुत'' (एकाहादि-रूप ज्योतिष्टोमादि अहर्गण में निकाला हुआ सोमरूप लता द्रव्य) ''प्रसुत'' (अहीनादि कर्म में प्रकर्ष निकाला हुआ सोमरस) तथा (सत्र में प्रकर्ष से निकाला हुआ सोमरस रूप) ''आसुत'' दिखायी देते हैं।।१।।

तुम दीप्ताग्नि होकर अन्न भक्षण करते हो तथा पुत्र पौत्रादिरूप प्रिय का दर्शन करते हो। जो वैश्वानर आत्मा की इस प्रकार से उपासना करता है, वह अन्य भी कोई व्यक्ति अन्न का भक्षण करता है, प्रिय वस्तु का दर्शन करता है और उसके कुल में (सुत, प्रसुत एवं आसुत इत्यादि कर्मित्वरूप) ब्रह्मतेज होता है। फिर भी यह वैश्वानर आत्मा का मस्तक ही है (सम्पूर्ण वैश्वानर नहीं है) ऐसा राजा ने कहा। साथ ही यह भी कहा- यदि तुम मेरे पास नहीं आये होते, तो निश्चय ही तुम्हारा मस्तक गिर जाता।। २।।

।। इति द्वादशः खण्डः ।।

---

इति। **दिवमेव** द्युलोकमेव वैश्वानरमुपासे **भगवो राजन्निति होवाच**। **एष वै सुतेजाः** शोभनं तेजो यस्य सोऽयं सुतेजा इति प्रसिद्धो **वैश्वानर आत्मा**ऽऽत्मनोऽवयवभूतत्वाद्यं त्वमात्मानमात्मैकदेशमुपास्से **तस्मा**त्सुतेजसो वैश्वानरस्योपासनात्**तव सुतम**भिषुतं सोमरूपं कर्मणि **प्रसुतं** प्रकर्षेण च सुतमा**सुतं** चाहर्गणादिषु तव **कुले दृश्यते**ऽतीव कर्मिणस्त्वत्कुलीनाः इत्यर्थः।। १।।

**अत्स्यन्नं** दीप्ताग्निः सन्**पश्यसि** च पुत्रपौत्रादि **प्रियमिष्टम्**। अन्योऽप्य**त्त्यन्नं पश्यति** च **प्रियं भवत्यस्य** सुतं प्रसुतमासुतमित्यादि कर्मित्वं **ब्रह्मवर्चसं कुले यः** कश्चिदेतं यथोक्त**मेवं वैश्वानरमुपास्ते**। **मूर्धा** त्वात्मनो वैश्वानरस्यैव न समस्तो वैश्वानरः। अतः समस्तबुद्ध्या वैश्वानरस्योपासनान्मूर्धा शिरस्**ते** विपरीतग्राहिणो **व्यपतिष्यद्वि**पतितमभविष्यत् **यद्यदि मां नाऽऽगमिष्यो** नाऽऽगतोऽभविष्यः। साध्वकार्षीर्यन्मामागतोऽसीत्यभिप्रायः।। २।।

इति पञ्चमाध्यायस्य द्वादशः खण्डः।।१२।।

## (अथ पञ्चमाध्यायस्य त्रयोदशः खण्डः।)

**अथ होवाच सत्ययज्ञं पौलुषिं, प्राचीनयोग्य! कं त्वमात्मानमुपास्स इत्यादित्यमेव भगवो राजन्निति होवाचैष वै विश्वरूप आत्मा वैश्वानरो यं त्वमात्मानमुपास्से, तस्मात्तव बहु विश्वरूपं कुले दृश्यते ।।१।।**

**प्रवृत्तोऽश्वतरीरथो, दासीनिष्कोऽत्स्यन्नं, पश्यसि प्रियमत्त्यन्नं पश्यति, प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं**

### अश्वपतिऔर सत्ययज्ञ का संवाद

फिर अश्वपति ने पौलुषि सत्ययज्ञ से कहा- हे प्राचीनयोग्य! तुम किस आत्मा की उपासना करते हो? उसने कहा- हे पूज्य राजन्! मैं आदित्य की ही वैश्वानर दृष्टि से उपासना करता हूँ। (राजा ने कहा-) यह निश्चय ही विश्वरूप वैश्वानर आत्मा है, (क्योंकि यह वैश्वानर का अवयव है) जिस आत्मा की तुम उपासना करते हो, इस उपासना के कारण से ही तेरे कुल में बहुत-सा ऐहिक और पारलौकिक) विश्वरूप साधन दीखता है।।१।।

दो खच्चरायिों से जुता हुआ रथ और दासियों से युक्त हार प्राप्त है। तुम अन्न भक्षण करते हो और प्रिय वस्तु को देखते हो। जो कोई अन्य व्यक्ति भी इस वैश्वानर आत्मा की इस प्रकार उपासना करता है, वह अन्न भक्षण करता है, प्रिय वस्तु को देखता है और उसके कुल में

---

**अथ होवाच सत्ययज्ञं पौलुषिं, हे प्राचीनयोग्य! कं त्वमात्मानमुपास्स इत्यादित्यमेव भगवो राजन्निति होवाच**। शुक्लनीलादिरूपत्वाद्विश्वरूपत्वमादित्यस्य, सर्वरूपत्वाद्वा। सर्वाणि रूपाणि हि त्वाष्ट्राणि यतोऽतो वा विश्वरूप आदित्यस्तदुपासनात्त**व बहु विश्वरूपमि**हामुत्रार्थमुपकरणं **दृश्यते कुले**।।१।।

किंच त्वामनु **प्रवृत्तोऽश्वतरी**भ्यां युक्तो **रथो**ऽश्वतरीरथो, **दासीनिष्को** दासीभिर्युक्तो निष्को हारो दासीनिष्कः। **अत्स्यन्नमि**त्यादि समानम्। चक्षुर्वैश्वानरस्य तु सविता।

**वैश्वानरमुपास्ते, चक्षुष्ट्वेतदात्मन इति होवाचान्धोऽभविष्यो, यन्मां नाऽऽगमिष्य इति ॥२॥**

इति पञ्चमाध्यायस्य त्रयोदशः खण्डः ॥१३॥

**(अथ पञ्चमाध्यायस्य चतुर्दशः खण्डः।)**

**अथ होवाचेन्द्रद्युम्नं भाल्लवेयं, वैयाघ्रपद्य! कं त्वमात्मानमुपास्स इति वायुमेव भगवो राजन्निति होवाचैष वै पृथग्वर्त्माऽऽत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वां पृथग्बलय आयन्ति पृथग्रथश्रेणयोऽनुयन्ति ॥१॥**

ब्रह्मतेज होता है। फिर भी यह वैश्वानर आत्मा का नेत्र ही है (सम्पूर्ण वैश्वानर नहीं है) ऐसा कहकर राजा ने फिर कहा- यदि तुम मेरे पास नहीं आते तो अन्धे हो जाते ॥२॥

॥इति त्रयोदशः खण्डः॥

अश्वपति तथा इन्द्रद्युम्न का संवाद

उसके बाद राजा ने भाल्लवेय इन्द्रद्युम्न से कहा- हे वैयाघ्रपद्य! तुम किस आत्मा की उपासना करते हो? उसने कहा- हे पूज्य राजन्! मैं वैश्वानर दृष्टि से वायु की उपासना करता हूँ, (राजा ने कहा-) जिस आत्मा की तुम उपासना करते हो, वह निश्चय ही (आवह-उद्वह आदि अनेकों भेद वाला) पृथक् वर्त्मा वैश्वानर आत्मा है। इसी के प्रभाव से तेरे पास पृथक्-पृथक् उपहार आते हैं और तेरे पीछे पृथक्-पृथक् रथ की पंक्तियाँ चलती हैं॥१॥

---

तस्य समस्तबुद्ध्योपासनाद**न्धोऽभविष्य**श्चक्षुर्हीनोऽभविष्यो **यन्मां नाऽऽगमिष्य इति** पूर्ववत्॥२॥

इति पञ्चमाध्यास्य त्रयोदशः खण्डः॥१३॥

**अथ होवाचेन्द्रद्युम्नं भाल्लवेयं, वैयाघ्रपद्य! कं त्वमात्मानुपास्से** इत्यादि समानम्। **पृथग्वर्त्मा** नाना वर्त्मानि यस्य वायोरावहोद्वहादिभिर्भेदैर्वर्तमानस्य सोऽयं पृथग्वर्त्मा वायुः, **तस्मात्**पृथग्वर्त्मात्मनो वैश्वानरस्योपासनात्पृथङ्नानादिक्कास्**त्वां** बलयो वस्त्रान्नादिलक्षणा **बलय आयन्त्या**गच्छन्ति। **पृथग्रथश्रेण**यो रथपङ्क्तयोऽपि त्वाम**नुयन्ति**॥१॥

**अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते प्राणस्त्वेष आत्मन इति होवाच प्राणस्ते उदक्रमिष्यद्यन्मां नाऽऽगमिष्य इति ।।२।।**

इति पञ्चमाध्यायस्य चतुर्दशः खण्डः।। १४।।

**(अथ पञ्चमाध्यायस्य पञ्चदशः खण्डः।)**

**अथ होवाच जनꣳ शार्कराक्ष्य! कं त्वमात्मानमुपास्स इत्याकाशमेव भगवो राजन्निति होवाचैष वै बहुल आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वं बहुलोऽसि प्रजया च धनेन च ।।१।।**

तुम अन्न भक्षण करते हो, प्रिय वस्तु को देखते हो। जो कोई अन्य व्यक्ति भी इस वैश्वानर आत्मा की इस प्रकार से उपासना करता है, वह भी अन्न भक्षण करता है, प्रिय वस्तु को देखता है और उसके कुल में ब्रह्मतेज होता है। किन्तु यह वैश्वानर आत्मा का प्राण ही है (सम्पूर्ण वैश्वानर नहीं है) ऐसा राजा ने कहा और यह भी कहा, यदि तुम मेरे पास नहीं आये होते, तो तेरा प्राण निकल जाता।। २।।

।। इति चतुर्दशः खण्डः ।।

### अश्वपति और जन का संवाद

फिर अश्वपति ने जन से कहा- हे शार्कराक्ष्य! तुम किस आत्मा की उपासना करते हो? जन ने कहा- हे राजन्! मैं वैश्वानर दृष्टि से आकाश की ही उपासना करता हूँ। (राजा ने कहा) यह निश्चय ही बहुल नामक वैश्वानर आत्मा है जिसकी तुम उपासना करते हो। इसी उपासना के बल से तुम प्रजा और स्वर्णादि धन से परिपूर्ण हो।। १।।

---

**अत्स्यन्न**मित्यादि समानम्। **प्राणस्त्वेष आत्मन इति होवाच प्राणस्ते** तवोद-**क्रमिष्यदु**त्क्रान्तोऽभविष्य**द्यन्मां नाऽऽगमिष्य इति**।। २।।

इति पञ्चमाध्यायस्य चतुर्दशः खण्डः।।१४।।

**अथ होवाच जन**मित्यादि समानम्। **एष वै बहुल आत्मा वैश्वानरः**। बहुलत्वमाकाशस्य सर्वगतत्वाद्बहुलगुणोपासनाच्च। **त्वं बहुलोऽसि प्रजया च** पुत्रपौत्रादिलक्षणया **धनेन च** हिरण्यादिना।। १।।

**अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते संदेहस्त्वेष आत्मन इति होवाच संदेहस्ते व्यशीर्यद्यन्मां नाऽऽगमिष्य इति ।।२।।**

इति पञ्चमाध्यायस्य पञ्चदशः खण्डः ।। १५ ।।

## (अथ पञ्चमाध्यायस्य षोडशः खण्डः।)

**अथ होवाच बुडिलमाश्वतराश्विं, वैयाघ्रपद्य! कं त्वमात्मानमुपास्स इत्यप एव भगवो राजन्निति होवाचैष वै**

तुम अन्न भक्षण करते हो, प्रिय वस्तु को देखते हो। इस प्रकार अन्य जो कोई भी व्यक्ति इस वैश्वानर आत्मा की इस प्रकार से उपासना करता है, वह भी अन्न भक्षण करता है, प्रिय वस्तु को देखता है और उसका कुल ब्रह्मतेज से युक्त होता है, पर याद रखो इस वैश्वानर आत्मा का यह आकाश केवल मध्यभाग है, सम्पूर्ण वैश्वानररूप नहीं है। ऐसा राजा ने कहा, साथ ही यह भी कहा, कि यदि तू मेरे पास नहीं आता, तो तेरे देह का मध्यभाग नष्ट हो जाता।। २।।

।। इति पञ्चदशः खण्डः ।।

### अश्वपति और बुडिल का संवाद

उसके बाद राजा ने अश्वतराश्व के पुत्र बुडिल से कहा- हे वैयाघ्रपद्य! तुम किस आत्मा की उपासना करते हो? बुडिल ने कहा- हे पूज्य राजन्! मैं तो वैश्वानर दृष्टि से जल की ही उपासना करता हूँ। (राजा ने कहा-) जिसकी तुम उपासना करते हो, वह निश्चय ही धन नामक

---

**संदेहस्त्वेष** संदेहो मध्यमं शरीरं वैश्वानरस्य। दिहेरुपचयार्थत्वान्मांसरुधिरास्थ्यादिभिश्च बहुलं शरीरं तत्**संदेहस्ते** तव शरीरं **व्यशीर्यच्छी**र्णमभविष्य**द्यन्मां नाऽऽगमिष्य इति**।। २।।

इति पञ्चमाध्यायस्य पञ्चदशः खण्डः।। १५।।

**अथ होवाच बुडिलमाश्वतराश्विमि**त्यादि समानम्। **एष वै रयिरात्मा वैश्वानरो**

**रयिरात्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वꣳ रयिमान्पुष्टिमानसि ॥१॥**

**अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते बस्तिस्त्वेष आत्मन इति होवाच बस्तिस्ते व्यभेत्स्यद्यन्मां नाऽऽगमिष्य इति ॥२॥**

**इति पञ्चमाध्यायस्य षोडशः खण्डः ॥१६॥**

**(अथ पञ्चमाध्यायस्य सप्तदशः खण्डः।)**

**अथ होवाचोद्दालकमारुणिं, गौतम! कं त्वमात्मानमुपास्से इति पृथिवीमेव भगवो राजन्निति होवाचैष वै प्रतिष्ठाऽऽत्मा**

वैश्वानर आत्मा है (क्योंकि जल से अन्न होता और अन्न से धन)। इसीलिये तुम धनवान् और शरीर से हृष्ट-पुष्ट हो।।१।।

तुम अन्न खाते हो और प्रिय वस्तु को देखते हो। जो कोई पुरुष इस वैश्वानर आत्मा की इस प्रकार उपासना करता है, वह अन्न खाता है, प्रिय वस्तु को देखता है और उसके कुल में ब्रह्म तेजस्वी होता है। किन्तु यह वैश्वानर आत्मा का मूत्र संग्रह स्थान है, सम्पूर्ण वैश्वानररूप नहीं है, ऐसा राजा ने कहा और यह भी कहा, यदि तू मेरे पास नहीं आया होता, तो तेरा बस्ति स्थान फट जाता।।२।।

।।इति षोडशः खण्डः ।।

### अश्वपति और उद्दालक का संवाद

अश्वपति ने उद्दालक आरुणि से कहा- हे गौतम! तुम किस आत्मा की उपासना करते हो? उद्दालक ने कहा- हे पूज्य रजान्! मैं वैश्वानर दृष्टि से पृथिवी की ही उपासना करता हूँ।

---

धनरूपः। अद्भ्योऽन्नं, ततो धनमिति। **तस्माद्रयिमान्**धनवांस्त्वं **पुष्टिमांश्च** शरीरेण पुष्टेश्चान्ननिमित्तत्वात्।।१।।

**बस्तिस्त्वेष आत्मनो** वैश्वानरस्य बस्तिर्मूत्रसंग्रहस्थानं **बस्तिस्ते व्यभेत्स्य**-द्भिन्नोऽभविष्य**द्यन्मां नाऽऽगमिष्य इति**।।२।।

**इति पञ्चमाध्यायस्य षोडशः खण्डः।।१६।।**

**अथ होवाचोद्दालकमित्यादि** समानम्। **पृथिवीमेव भगवो राजन्निति होवाच।**

**वैश्वानरो, यं त्वमात्मानमुपास्से तस्मात्त्वं प्रतिष्ठितोऽसि प्रजया च पशुभिश्च ।।१।।**

**अत्स्यन्नं, पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते पादौ त्वेतावात्मन इति** शिथिलौ **होवाच, पादौ ते व्यम्लास्येतां, यन्मां नाऽऽगमिष्य इति ।।२।।**

इति पञ्चमाध्यायस्य सप्तदशः खण्डः।। १७।।

(अथ पञ्चमाध्यायस्याष्टादशः खण्डः)

**तान्होवाचैते वै खलु यूयं पृथगिवेममात्मानं वैश्वानरं विद्वाꣳसोऽन्नमत्थ यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं**
परिच्छिन्नात्मरूपेण ... हस्तिदर्शन इव

(राजा ने कहा-) जिसकी तुम उपासना करते हो, वह निश्चय ही उस वैश्वानर आत्मा के चरण हैं, सम्पूर्ण वैश्वानररूप नहीं है। इसी की उपासना से तुम प्रजा और पशुओं से युक्त हो।।१।।

तुम अन्न भक्षण करते हो और प्रिय वस्तु को देखते हो। जो कोई अन्य व्यक्ति भी इस वैश्वानर आत्मा की इस प्रकार उपासना करता है, वह अन्न खाता है, प्रिय वस्तु को देखता है, उसके कुल में ब्रह्म तेजस्वी होता है। पर याद रखो यह आत्मा के चरण ही हैं, सम्पूर्ण वैश्वानररूप नहीं है। ऐसा राजा ने कहा, साथ में यह भी कहा यदि तू मेरे पास नहीं आता, तो तेरे पाद शिथिल हो जाते।।२।।

।।इति सप्तदशः खण्डः ।।

**समस्त वैश्वानर उपासना का फल**

व्यस्त उपासना करने वाले उन ऋषियों से राजा अश्वपति ने कहा- ये सभी तुम लोग इस वैश्वानर आत्मा को पृथक-पृथक-सा जान कर अन्न भक्षण करते हो। जो कोई 'यही मैं हूँ, इस

---

**एष वै प्रतिष्ठा** पादौ वैश्वानरस्य। **पादौ ते व्यम्लास्येतां** विम्लानावभविष्यतां श्लथीभूतौ **यन्मां नाऽऽगमिष्य इति**।।१।।२।।

शिथिलौ

इति पञ्चमाध्यायस्य सप्तदशः खण्डः।।१७।।

**तान्यथोक्तवैश्वानरदर्शनवतो होवाच। एते** यूयं **वै खल्वित्यनर्थकौ** यूयं पृथगिवापृथक्सन्तमिममेकं वैश्वानरमात्मानं **विद्वांसोऽन्नमत्थ** परिच्छिन्नात्मबुद्ध्येत्येतद्धस्तिदर्शन

**वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति ॥१॥**

**तस्य ह वा एतस्याऽऽत्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्माऽऽत्मा संदेहो बहुलो बस्तिरेव**

प्रकार अभिमान करता हुआ इस अभिमान के विषय (द्युलोक से लेकर पृथिवी पर्यन्त) प्रादेशमात्र वैश्वानर आत्मा की उपासना करता है वह (वैश्वानर वेत्ता सर्वात्मा होकर अन्न भक्षण करता है, अज्ञानियों के समान देहमात्र में अभिमान करके अन्न नहीं खाता किन्तु) समस्त लोकों में, सभी प्राणियों में और शरीरादि सम्पूर्ण आत्माओं में अन्न भक्षण करता है।। १।।

**समस्त वैश्वानर का वर्णन**

उस इस प्रकृत वैश्वानर आत्मा का मस्तक ही द्युलोक है, चक्षु सूर्य है, प्राण पृथग्वर्त्मारूप वायु है, शरीर का मध्यभाग आकाश है, बस्ति ही जल है और पृथिवी दोनों पाद हैं, वक्षःस्थल वेदी है, लोम कुशाएं हैं, (क्योंकि वेदी में बिछे हुए दर्भ के समान वक्षःस्थल पर बिछे हुए से

---

इव जात्यन्धाः। **यस्त्वेतमेवं** यथोक्तावयवैर्द्युमूर्धादिभिः पृथिवीपादान्तैर्विशिष्टमेकं **प्रादेशमात्रं** प्रादेशैर्द्युमूर्धादिभिः पृथिवीपादान्तैरध्यात्मं मीयते ज्ञायत इति प्रादेशमात्रम्। मुखादिषु वा करणेष्वत्तृत्वे मीयत इति प्रादेशमात्रः। द्युलोकादिपृथिव्यन्तप्रदेशपरिमाणो वा प्रादेशमात्रः। प्रकर्षेण शास्त्रेणाऽऽदिश्यन्त इति प्रादेशा द्युलोकादय एव तावत्परिमाणः प्रादेशमात्रः। शाखान्तरे तु मूर्धादिचिबुकप्रतिष्ठित इति प्रादेशमात्रं कल्पयन्ति। इह तु न तथाऽभिप्रेतः। तस्य ह वा एतस्याऽऽत्मन इत्याद्युपसंहारात्। प्रत्यगात्मतयाऽभिविमीयतेऽहमिति ज्ञायत इत्यभिविमानस्तमेत**मात्मानं वैश्वानरं** विश्वान्नरान्नयति पुण्यपापानुरूपां गतिं सर्वात्मैष ईश्वरो वैश्वानरो विश्वो नर एव वा सर्वात्मत्वात्। विश्वैर्वा नरैः प्रत्यगात्मतया प्रविभज्य नीयते इति वैश्वानरस्तमेव**मुपास्ते** यः, **सो**ऽदन्नन्नादी **सर्वेषु लोकेषु** द्युलोकादिषु **सर्वेषु भूतेषु** चराचरेषु **सर्वेष्वात्मसु** शरीरेन्द्रियमनोबुद्धिषु तेषु ह्यात्मकल्पनाव्यपदेशः प्राणिना**मन्नमत्ति** वैश्वानरवित्सर्वात्मा सन्नन्नमत्ति। न यथाऽज्ञः पिण्डमात्राभिमानः सन्नित्यर्थः।।१।।

कस्मादेवम्? यस्मा**त्तस्य ह वै प्रकृतस्यैवैतस्याऽऽत्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्माऽऽत्मा संदेहो बहुलो बस्तिरेव रयिः पृथिव्येव पादौ**। अथवा विध्यर्थमेतद्वचनमेवमुपास्य इति। अथेदानीं वैश्वानरविदो भोजनेऽग्निहोत्रं संपिपादयिषन्नाह— एतस्य वैश्वानरस्य भोक्तुर**उर एव वेदि**राकारसामान्यात्। **लोमानि**

**रयिः, पृथिव्येव पादावुर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो, मनोऽन्वाहार्यपचन, आस्यमाहवनीयः ।।२।।**

इति पञ्चमाध्यायस्याष्टादशः खण्डः ।।१८।।

**(अथ पञ्चमाध्यायस्यैकोनविंशः खण्डः।)**

**तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयꣳ, स यां प्रथमामाहुतिं जुहुयात्तां जुहुयात्प्राणाय स्वाहेति, प्राणस्तृप्यति ।।१।।**

**प्राणे तृप्यति चक्षुस्तृप्यति चक्षुषि तृप्यत्यादित्यस्तृप्यत्यादित्ये तृप्यति द्यौस्तृप्यति दिवि तृप्यन्त्यां यत्किंच द्यौश्चाऽऽदित्यश्चा-**

दीखते हैं) हृदय गार्हपत्याग्नि है। हृदय से उत्पन्न हुआ मन अन्वाहार्यपचन अग्नि है और मुख आहवनीयाग्नि है (क्योंकि इसी में अन्न का हवन किया जाता है)।।२।।

।। इत्यष्टदशः खण्डः ।।

**भोजन में अग्निहोत्रत्व के लिए प्रथम प्राणाहुति का वर्णन**

(पूर्वोक्त सिद्धान्त के कारण वैश्वानर उपासक का यह कर्तव्य है) कि भोजन के समय जो भात पहले आवे, उसका हवन करे। वह भोक्ता जो पहली आहुति दे तो उसे ''प्राणाय स्वाहा' ऐसा कहकर मुख में अन्न डालें, उससे प्राण तृप्त होता है।।१।।

प्राण के तृप्त होने पर नेत्र इन्द्रिय तृप्त होती है, नेत्र इन्द्रिय के तृप्त होने पर आदित्य तृप्त

---

बर्हिर्वेद्यामिवोरसि लोमान्यास्तीर्णानि दृश्यन्ते। **हृदयं गार्हपत्यो**, हृदयाद्धि **मनः** प्रणीतमिवानन्तरीभवत्यतो**ऽन्वाहार्यपचनो**ऽग्निर्मनः। **आस्यं** मुखमा**हवनीय** इवाऽऽहवनीयो हूयतेऽस्मिन्नन्नमिति।।२।।

इति पञ्चमाध्यायस्याष्टादशः खण्डः ।।१८।।

**तत्त**त्रैवं सति **यद्भक्तं** भोजनकाल **आगच्छेद्भो**जनार्थं **तद्धोमीयं** तद्धोतव्यमग्निहोत्रसंपन्मात्रस्य विवक्षितत्वान्नाग्निहोत्राङ्गेतिकर्तव्यताप्राप्तिरिह **स** भोक्ता **यां प्रथमामाहुतिं जुहुयात्तां** कथं **जुहुयादि**त्याह— **प्राणाय स्वाहेत्य**नेन मन्त्रेणाऽऽहुतिशब्दाद्‌वदानप्रमाणमन्नं प्रक्षिपेदित्यर्थः। तेन **प्राणस्तृप्यति**।। १ ।।

**प्राणे तृप्यति चक्षुस्तृप्यति** चक्षुरादित्यो **द्यौश्चे**त्यादि तृप्यति यच्चान्य**द्द्यौश्चाऽऽदित्यश्च** स्वामित्वेना**धितिष्ठतस्तच्च तृप्यति तस्य तृप्तिमनु** स्वयं भुञ्जान-

धितिष्ठतस्तत्तृप्यति तस्यानु तृप्तिं तृप्यति, प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ।।२।।

इति पञ्चमाध्यस्यैकोनविंशः खण्डः ।।१९।।



(अथ पञ्चमाध्यायस्य विंशः खण्डः।)

अथ यां द्वितीयां जुहुयात्तां जुहुयाद्व्यानाय स्वाहेति व्यानस्तृप्यति ।।१।।

व्याने तृप्यति श्रोत्रं तृप्यति श्रोत्रे तृप्यति चन्द्रमास्तृप्यति चन्द्रमसि तृप्यति दिशस्तृप्यन्ति दिक्षु तृप्यन्तीषु यत्किंच दिशश्च चन्द्रमाश्चाधितिष्ठन्ति तत्तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ।।२।।

इति पञ्चमाध्यायस्य विंशः खण्डः ।।२०।।

होता है। सूर्य के तृप्त होने पर द्युलोक तृप्त होता है तथा द्युलोक के तृप्त होने पर जिस किसी के ऊपर द्युलोक और आदित्य (स्वामी भाव से) अधिष्ठित हैं, वह भी तृप्त होता है और उसके तृप्त होने पर स्वयं भोक्ता प्रजा, पशु, अन्नाद्य, तेज और ब्रह्मतेज के द्वारा तृप्त होता है।। २।।

।। इत्येकोनविंशः खण्डः ।।



द्वितीय आहुति

उसके बाद जो दूसरी आहुति डाले तो उसे "व्यानाय स्वाहा" इस मन्त्र को बोलकर मुख में ग्रास डाले, इस प्रकार व्यान तृप्त होता है ।।१।।

व्यान के तृप्त होने पर श्रोत्र तृप्त होता है, श्रोत्र के तृप्त होने पर चन्द्रमा तृप्त होता है, चन्द्रमा के तृप्त होने पर दिशाएं तृप्त होती हैं और दिशाओं के तृप्त होने पर जिस किसी के ऊपर चन्द्रमा एवं दिशाएं (स्वामी भाव से) अधिषिठत हैं, वह तृप्त होता है। उसकी तृप्ति के पीछे वह भोक्ता, प्रजा, पशु, अन्नाद्य, तेज एवं ब्रह्मतेज से तृप्त हो जाता है ।।

।। इति विंशः खण्डः ।।

---

स्तृप्यतीत्येव प्रत्यक्षम्। किं च प्रजादिभिश्च। तेजः शरीरस्था दीप्तिरुज्ज्वलत्वं प्रागल्भ्यं वा, ब्रह्मवर्चसं वृत्तस्वाध्यायनिमित्तं तेजः।।२।।

इति पञ्चमाध्यायस्यैकोनविंशः खण्डः।।१९।।

**अथ यां द्वितीयां** तृतीयां चतुर्थीं पञ्चमीमिति समानम्।। १।।२।।

इति पञ्चमाध्यायस्य विंशः खण्डः।। २०।।



(अथ पञ्चमाध्यायस्यैकविंशः खण्डः।)

**अथ यां तृतीयां जुहुयात्तां जुहुयादपानाय स्वाहेत्य पानस्तृप्यति ॥१॥**

**अपाने तृप्यति वाक्तृप्यति वाचि तृप्यन्त्यामग्निस्तृप्यत्यग्नौ तृप्यति पृथिवी तृप्यति पृथिव्यां तृप्यन्त्यां यत्किंच पृथिवी चाग्निश्चाधितिष्ठतस्तत्तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥२॥**

इति पञ्चमाध्यायस्यैकविंशः खण्डः॥ २१॥

(अथ पञ्चमाध्यायस्य द्वाविंशः खण्डः।)

**अथ यां चतुर्थीं जुहुयात्तां जुहुयात्समानाय स्वाहेति समानस्तृप्यति ॥१॥**



तृतीय आहुति का वर्णन

पुनः जिस तीसरी आहुति को दे उसे ''अपानाय स्वाहा'' इस मन्त्र के द्वारा मुख में डाले, इस प्रकार अपान तृप्त हो जाता है॥१॥

अपान के तृप्त होते ही वाणी तृप्त होती है, उससे अग्नि तृप्त होती है, अग्नि के तृप्त होने पर पृथिवी तृप्त होती है और पृथिवी के तृप्त होने पर जिस किसी के ऊपर पृथिवी तथा अग्नि (स्वामी भाव से) प्रतिष्ठित हैं वह तृप्त होता है एवं उसकी तृप्ति के पीछे भोक्ता, प्रजा, पशु, अन्नाद्य तेज और ब्रह्मतेज से तृप्त हो जाता है॥२॥

॥ इत्येकविंशः खण्डः ॥



चतुर्थ आहुति का वर्णन

फिर जिस चतुर्थ आहुति को दे, तो उसे ''समानाय स्वाहा'' इस मन्त्र से मुख में ग्रास डाले, इससे समान तृप्त होता है॥१॥

---

॥१॥२॥

इति पञ्चमाध्यायस्यैकविंशः खण्डः॥ २१॥

समाने तृप्यति मनस्तृप्यति मनसि तृप्यति पर्जन्यस्तृप्यति पर्जन्ये तृप्यति विद्युत्तृप्यति विद्युति तृप्यन्त्यां यत्किंच विद्युच्च पर्जन्यश्चाधितिष्ठतस्तत्तृप्यति तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥२॥

इति पञ्चमाध्यायस्य द्वाविंशः खण्डः॥ २२॥

(अथ पञ्चमाध्यायस्य त्रयोविंशः खण्डः।)

अथ यां पञ्चमीं जुहुयात्तां जुहुयादुदानाय स्वाहेत्युदानस्तृप्यति ॥१॥

उदाने तृप्यति त्वक्तृप्यति त्वचि तृप्यन्त्यां वायुस्तृप्यति वायौ तृप्यत्याकाशस्तृप्यत्याकाशे तृप्यति यत्किंच वायुश्चाऽऽकाशश्चाधितिष्ठतस्तत्तृप्यति तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥२॥

इति पञ्चमाध्यायस्य त्रयोविंशः खण्डः॥ २३॥

समाने के तृप्त होने पर मन तृप्त होता है, मन के तृप्त होने पर पर्जन्य तृप्त होता है। पर्जन्य के तृप्त होने पर जिस किसी के ऊपर विद्युत् और पर्जन्य अधिष्ठित हैं, वह तृप्त होता है। इस प्रकार उसकी तृप्ति के पीछे भोक्ता, प्रजा, पशु, अन्नाद्य, तेज और ब्रह्मतेज से तृप्त होता है।। २।।

।। इति द्वाविंशः खण्डः ।।

### पंचम आहुति का वर्णन

पुनः जिस पंचम आहुति को मुख में दे, उसे "उदानाय स्वाहा" इस मन्त्र से मुख में डाले, इस प्रकार उदान तृप्त होता है।। १।।

उदान के तृप्त होने पर त्वगिन्द्रिय तृप्त होती है, त्वचा के तृप्त होने पर वायु तृप्त होता है। वायु के तृप्त होने पर आकाश तृप्त होता है तथा आकाश के तृप्त होने पर जिस किसी के ऊपर वायु और आकाश (स्वामी भाव से) अधिष्ठित है, वह तृप्त होता और उसकी तृप्ति के पीछे स्वयं भोक्ता प्रजा, पशु, अन्नाद्य, तेज और ब्रह्मतेज से तृप्त होता है।। २।।

।। इति त्रयोविंशः खण्डः ।।

---

।। १।। २।।

इति पञ्चमाध्यायस्य द्वाविंशः खण्डः।। २२।।

।। १।। २।।

इति पञ्चमाध्यायस्य त्रयोविंशः खण्डः।। २३।।

## (अथ पञ्चमाध्यायस्य चतुर्विंशः खण्डः।)

**स य इदमविद्वानग्निहोत्रं जुहोति यथाऽङ्गारानपोह्य भस्मनि जुहुयात्तादृक्तत्स्यात् ॥१॥**

**अथ य एतदेवं विद्वानग्निहोत्रं जुहोति तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुतं भवति ॥२॥**

**तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवꣳ हास्य सर्वे पाप्मानः प्रदूयन्ते य एतदेवं विद्वानग्निहोत्रं जुहोति ॥३॥**

### अविद्वानों का अग्निहोत्र

वह जो कोई इस वैश्वानर विद्या को न जानता हुआ लोक प्रसिद्ध अग्निहोत्र करता है- उसका वह अग्निहोत्र ऐसा ही है, जैसे आहुति योग्य अंगारों को हटाकर भस्म में आहुति डाले (इस प्रकार वैश्वानर उपासक के अग्निहोत्र की प्रशंसा की गयी है)।।१।।

### विद्वानों का अग्निहोत्र

किन्तु जो इस प्रकार इस वैश्वानर को जानकर अग्निहोत्र करता है, उसका सम्पूर्ण लोक, सम्पूर्ण भूत और पूर्वोक्त सम्पूर्ण आत्माओं में हवन हो जाता है।।२।।

इस विषय में यह दृष्टान्त है- जैसे सींक का अग्रभाग अग्नि में डालते ही जल कर राख हो जाता है, वैसे ही जो इस प्रकार जानता हुआ अग्निहोत्र करता है, उसके सम्पूर्ण पाप जलकर भस्म हो जाते हैं।।३।।

---

**स यः** कश्चिदिदं वैश्वानरदर्शनं यथोक्त**मविद्वान्**स**न्नग्निहोत्रं** प्रसिद्धं **जुहोति यथाऽङ्गारा**नाहुतियोग्या**न्पोह्या**नाहुतिस्थाने **भस्मनि जुहुयात्तादृक्त**त्तुल्यं तस्य तदग्निहोत्रहवनं **स्याद्वै**श्वानरविदोऽग्निहोत्रमपेक्ष्येति प्रसिद्धाग्निहोत्रनिन्दया वैश्वानरविदोऽग्निहोत्रं स्तूयते।। १ ।।

अतश्चैतद्विशिष्टमग्निहोत्रम्। कथम्। **अथ य एतदेवं विद्वानग्निहोत्रं जुहोति तस्य** यथोक्तवैश्वानरविज्ञानवतः **सर्वेषु लोकेष्वि**त्याद्युक्तार्थम्। हुतमन्नमत्तीत्यनयोरेकार्थत्वात्।। २ ।।

किंच **तद्यथेषीकाया**स्**तूल**मग्र**मग्नौ प्रोतं** प्रक्षिप्तं **प्रदूयेत** प्रदह्येत क्षिप्रमेवं **हास्य** विदुषः सर्वात्मभूतस्य सर्वान्नानामत्तुः **सर्वे** निरवशिष्टाः **पाप्मानो** धर्माधर्माख्या अनेकजन्मसंचिता इह च प्राग्ज्ञानोत्पत्तेर्ज्ञानसहभाविनश्च **प्रदूयन्ते** प्रदह्येरन्वर्तमानशरीरारम्भकपाप्मवर्जं, लक्ष्यं प्रति मुक्तेषुवत्प्रवृत्तफलत्वात्तस्य न दाहः। **य एतदेवं विद्वानग्निहोत्रं जुहोति** भुङ्क्ते।। ३ ।।

**तस्मादु हैवंविद्यद्यपि चण्डालायोच्छिष्टं प्रयच्छेदात्मनि हैवास्य तद्वैश्वानरे हुतꣳ स्यादिति तदेष श्लोकः ॥४॥**

**यथेह क्षुधिता बाला मातरं पर्युपासते एवꣳ सर्वाणि भूतान्यग्निहोत्रमुपासते इत्यग्निहोत्रमुपासत इति ॥५॥**

**इति पञ्चमाध्यायस्य चतुर्विंशः खण्डः॥ २४॥**

**इति च्छान्दोग्योपनिषदि पञ्चमोऽध्यायः समाप्तः ॥५॥**

अतः वह इस प्रकार जानकर यदि चाण्डाल को उच्छिष्ट भी दे तो भी उस उपासक का वह अन्न वैश्वानर आत्मा में ही हवन किया हुआ माना जाता है, इस विषय में यह श्लोक भी है।।४।।

जैसे इस लोक में क्षुधा से पीड़ित बालक सभी प्रकार से माता की उपासना करते हैं (कि माता हमें कब अन्न देगी) ऐसे ही सम्पूर्ण प्राणी इस प्रकार जानने वाले के अग्निहोत्ररूप भोजन की उपासना करते हैं। अग्निहोत्र की उपासना करते हैं ।।५।।

।। इति पंचमाध्यायः, चतुर्विंशः खण्डः ।।

**इस प्रकार छान्दोग्योपनिषत् पञ्चम अध्याय की श्रीमत्परमहंस परिव्राजकाचार्य कैलासपीठाधीश्वर परमादर्श आचार्य महामण्डलेश्वर अनन्तश्री स्वामी विद्यानन्द गिरि जी महाराज कृत मिताक्षरा व्याख्या सम्पूर्ण हुई।।५।।**

---

स यद्यपि **चण्डालायो**च्छिष्टानर्हा**योच्छिष्टं प्रयच्छे**दुच्छिष्टं दद्यात्प्रतिषिद्धमुच्छिष्टदानं यद्यपि कुर्या**दात्मनि हैवास्य** चण्डालदेहस्थे **वैश्वानरे** त**द्धुतं स्या**न्नाधर्मनिमित्तमिति विद्यामेव स्तौति। तदेतस्मिन्स्तुत्यर्थे **श्लोको** मन्त्रोऽप्ये**ष** भवति।।४।।

**यथेह** लोके **क्षुधिता** बुभुक्षिता **बाला मातरं पर्युपासते** कदा नो माताऽन्नं प्रयच्छतीत्येवं **सर्वाणि** भूतान्यन्नादान्येवंविदो**ऽग्निहोत्रं** भोजन**मुपासते** कदा त्वसौ भोक्ष्यत इति, जगत्सर्वं विद्वद्भोजनेन तृप्तं भवतीत्यर्थः। द्विरुक्तिरध्यायपरिसमाप्त्यर्था।।५।।

**इति दशमाह्निकम्।।१०।।**

इति पञ्चमाध्यायस्य चतुर्विंशः खण्डः।। २४।।

इति श्रीमद्गोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यस्य श्रीमच्छंकरभगवतः कृतौ छान्दोग्योपनिषद्विवरणे पञ्चमोऽध्यायः समाप्तः।।५।।

# षष्ठोऽध्यायः

## (अथ षष्ठाध्यायस्य प्रथमः खण्डः।)

ॐ श्वेतकेतुर्हाऽऽरुणेय आस तꣳह पितोवाच श्वेतकेतो वस ब्रह्मचर्यं न वै सोम्यास्मत्कुलीनोऽननूच्य ब्रह्मबन्धुरिव भवतीति ।।१।।

स ह द्वादशवर्ष उपेत्य चतुर्विꣳशतिवर्षः सर्वान्वेदानधीत्य महामना अनूचानमानी स्तब्ध एयाय तꣳह पितोवाच श्वेतकेतो

**(आरुणि का श्वेतकेतु के प्रति उपदेश)**

शास्त्र में यह प्रसिद्ध है कि अरुण का पौत्र श्वेतकेतु था। उससे उसके पिता ने कहा, हे श्वेतकेतु! तू (हमारे कुल के अनुरूप गुरु के पास जाकर) ब्रह्मचर्य पूर्वक वास कर, क्योंकि हे सोम्य! यह उचित नहीं है, हमारे कुल में उत्पन्न हुआ कोई भी पुरुष अध्ययन न करके ब्रह्मबन्धु के समान हो जावे।। १।।

पिता के कहने पर वह श्वेतकेतु बारह वर्ष की अवस्था में उपनयन कराके चौबीस वर्ष की अवस्था तक सम्पूर्ण वेदों का अध्ययन कर और उनका अर्थ जानकर अपने

---

**श्वेतकेतुर्हाऽऽरुणेय आस**ेत्याद्यध्यायसंबन्धः। सर्वं खल्विदं ब्रह्म तज्जलानित्युक्तं, कथं तस्माज्जगदिदं जायते, तस्मिन्नेव च लीयतेऽनिति च तेनैवेत्येतद्वक्तव्यम्। अनन्तरं चैकस्मिन्भुक्ते विदुषि सर्वं जगत्तृप्तं भवतीत्युक्तं तदेकत्वे सत्यात्मनः सर्वभूतस्थस्योपपद्यते नाऽऽत्मभेदे। कथं च तदेकत्वमिति तदर्थोऽयं षष्ठोऽध्याय आरभ्यते। पितापुत्राख्यायिका विद्यायाः सारिष्ठत्वप्रदर्शनार्था। श्वेतकेतुरिति नामतो हेत्यैतिह्यार्थः। आरुणेयोऽरुणस्य पौत्र आस बभूव। तं पुत्रं हाऽऽरुणिः पिता योग्यं विद्याभाजनं मन्वानस्तस्योपनयनकालात्ययं च पश्यन्नुवाच हे **श्वेतकेतो**ऽनुरूपं गुरुं कुलस्य नो गत्वा, वस ब्रह्मचर्यम्। न चैतद्युक्तं, यदस्मत्कुलीनो हे **सोम्याननूच्या**नधीत्य **ब्रह्मबन्धुरिव भवतीति** ब्राह्मणान्बन्धून्व्यपदिशति न स्वयं ब्राह्मणवृत्त इति।। १।।

'तस्यातः प्रवासोऽनुमीयते पितुः। येन स्वयं गुणवान्सन्पुत्रं नोपनेष्यति। स पित्रोक्तः श्वेतकेतुर्ह **द्वादशवर्षः** सन्नुपेत्याऽऽचार्यं यावच्चतुर्विंशतिवर्षो बभूव

**यन्नु सोम्येदं महामना अनूचानमानी स्तब्धोऽस्युत तमादेश-मप्राक्ष्यः ।।२।।**

प्रवक्ता अप्रणत स्वभाव

सुनने का शोध **येनाश्रुतꣳश्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति कथं नु भगवः स आदेशो भवतीति ।।३।।** अर्थवाद

को बड़ा बुद्धिमान और व्याख्याता मानता हुआ अविनीत स्वभाव होकर घर लौटा। पिता ने उससे कहा हे सोम्य! तुम जो पंडित और उद्दण्ड दीखते हो, वह क्या तूने उस आदेश को पूछा है।।२।।

जिस आदेश के श्रवण द्वारा न सुना हुआ पदार्थ भी सुना हो जाता है, न मनन किया हुआ पदार्थ भी मनन हो जाता है और अनिश्चित पदार्थ भी निश्चित हो जाता है। (इस बात को सुनकर श्वेतकेतु ने कहा) भगवन्! वह आदेश कैसा होता है।।३।।

---

तावत्**सर्वान्वेदां**श्चतुरोऽ**प्यधीत्य** तदर्थं च बुद्ध्वा **महामना** महद्गम्भीरं मनो यस्यासममात्मानमन्यैर्मन्यमानं मनो यस्य सोऽयं महामना **अनूचानमा**न्यनूचानमात्मानं मन्यत इत्येवंशीलो यः सोऽनूचानमानी **स्तब्धो**ऽप्रणतस्वभाव **एयाय** गृहम्। तमेवंभूतं **हा**ऽऽत्मनोऽननुरूपशीलं स्तब्धं मानिनं पुत्रं दृष्ट्वा **पितोवाच** सद्धर्मावतारचिकीर्षया। **श्वेतके**तो! **यन्विदं महामना अनूचानमानी स्तब्ध**श्चासि, कस्तेऽतिशयः प्राप्त उपाध्यायादुतापि **तमादेशमा**दिश्यत इत्यादेशः केवलशास्त्राचार्योपदेशगम्यमित्येतद्येन वा परं ब्रह्माऽऽदिश्यते स आदेशस्तम**प्राक्ष्यः** पृष्टवानस्याचार्यम्।।२।।

प्रवक्ता

तमादेशं विशिनष्टि येनाऽऽदेशेन श्रुतेना**श्रुत**मप्यन्यच्**छ्रुतं भवत्यमतं मतम**तर्कितं तर्कितं भवत्य**विज्ञातं विज्ञातम**निश्चितं निश्चितं भव**तीति**। सर्वानपि वेदानधीत्य सर्वं चान्यद्वेद्यमधिगम्याप्यकृतार्थ एव भवति, यावदात्मतत्त्वं न जानातीत्याख्यायिकातोऽवगम्यते। तदेतदद्भुतं श्रुत्वाऽऽह **कथं** न्वेतदप्रसिद्धमन्यविज्ञानेनान्यद्विज्ञातं भवतीत्येवं मन्वानः पृच्छति, कथं नु केन प्रकारेण हे **भगवः! स आदेशो भवतीति**।।३।।

